# तारासहस्रनामस्तोत्रम् बृहन्नीलतन्त्रार्गतम्

श्रीदेव्युवाच ।

देव देव महादेव सृष्टिस्थित्यन्तकारक ।
प्रसङ्गेन महादेव्या विस्तरं कथितं मयि ॥ १८-१॥

देव्या नीलसरस्वत्याः सहस्रं परमेश्वर ।
नाम्नां श्रोतुं महेशान प्रसादः क्रियतां मयि ।
कथयस्व महादेव यद्यहं तव वल्लभा ॥ १८-२॥

श्रीभैरव उवाच ।

साधु पृष्टं महादेवि सर्वतन्त्रेषु गोपितम् ।
नाम्नां सहस्रं तारायाः कथितुं नैव शक्यते ॥ १८-३॥

प्रकाशात् सिद्धिहानिः स्यात् श्रिया च परिहीयते ।
प्रकाशयति यो मोहात् षण्मासाद् मृत्युमाप्नुयात् ॥ १८-४॥

अकथ्यं परमेशानि अकथ्यं चैव सुन्दरि ।
क्षमस्व वरदे देवि यदि स्नेहोऽस्ति मां प्रति ॥ १८-५॥

सर्वस्वं शृणु हे देवि सर्वागमविदां वरे ।
धनसारं महादेवि गोप्तव्यं परमेश्वरि ॥ १८-६॥

आयुर्गोप्यं गृहच्छिद्रं गोप्यं न पापभाग् भवेत् ।
सुगोप्यं परमेशानि गोपनात् सिद्धिमश्नुते ॥ १८-७॥

प्रकाशात् कार्यहानिश्च प्रकाशात् प्रलयं भवेत् ।
तस्माद् भद्रे महेशानि न प्रकाश्यं कदाचन ॥ १८-८॥

इति देववचः श्रुत्वा देवी परमसुन्दरी ।
विस्मिता परमेशानी विषणा तत्र जायते ॥ १८-९॥

शृणु हे परमेशान कृपासागरपारग ।
तव स्नेहो महादेव मयि नास्त्यत्र निश्चितम् ॥ १८-१०॥

भद्रं भद्रं महादेव इति कृत्वा महेश्वरी ।

विमुखीभूय देवेशी तत्रास्ते शैलजा शुभा ॥ १८-११॥

विलोक्य विमुखीं देवीं महादेवो महेश्वरः ।
प्रहस्य परमेशानीं परिष्वज्य प्रियां कथाम् ॥ १८-१२॥

कथयामास तत्रैव महादेव्यै महेश्वरि ।
मम सर्वस्वरूपा त्वं जानीहि नगनन्दिनि ॥ १८-१३॥

त्वां विनाहं महादेवि पूर्वोक्तशवरूपवान् ।
क्षमस्व परमानन्दे क्षमस्व नगनन्दिनि ॥ १८-१४॥

यथा प्राणो महेशानि देहे तिष्ठति सुन्दरि ।
तथा त्वं जगतामाद्ये चरणे पतितोऽस्म्यहम् ॥ १८-१५॥

इति मत्वा महादेवि रक्ष मां तव किङ्करम् ।
ततो देवी महेशानी त्रैलोक्यमोहिनी शिवा ॥ १८-१६॥

महादेवं परिष्वज्य प्राह गद्गदया गिरा ।
सदा देहस्वरूपाहं देही त्वं परमेश्वर ॥ १८-१७॥

तथापि वञ्चनां कर्तुं मामित्थं वदसि प्रियम् ।
महादेवः पुनः प्राह भैरवि प्राणवल्लभे ॥ १८-१८॥

नाम्नां सहस्रं तारायाः श्रोतुमिच्छस्यशेषतः ।

श्रीदेव्युवाच ।

न श्रुतं परमेशान तारानामसहस्रकम् ।
कथयस्व महाभाग सत्यं परमसुन्दरम् ॥ १८-१९॥

श्रीपार्वत्युवाच ।

कथमीशान सर्वज्ञ लभन्ते सिद्धिमुत्तमाम् ।
साधकाः सर्वदा येन तन्मे कथय सुन्दर ॥ १८-२०॥

यस्मात् परतरं नास्ति स्तोत्रं तन्त्रेषु निश्चितम् ।
सर्वपापहरं दिव्यं सर्वापद्विनिवारकम् ॥ १८-२१॥

सर्वज्ञानकरं पुण्यं सर्वमङ्गलसंयुतम् ।
पुरश्चर्याशतैस्तुल्यं स्तोत्रं सर्वप्रियङ्करम् ॥ १८-२२॥

वश्यप्रदं मारणदमुच्चाटनप्रदं महत् ।
नाम्नां सहस्रं तारायाः कथयस्व सुरेश्वर ॥ १८-२३॥

श्रीमहादेव उवाच ।

नाम्नां सहस्रं तारायाः स्तोत्रपाठाद् भविष्यति ।
नाम्नां सहस्रं तारायाः कथयिष्याम्यशेषतः ॥ १८-२४॥

शृणु देवि सदा भक्त्या भक्तानां परमं हितम् ।
विना पूजोपहारेण विना जा(प्येन यत् फलम् ॥ १८-२५॥

तत् फलं सकलं देवि कथयिष्यामि तच्छृणु ।

ॐ अस्य श्रीतारासहस्रनामस्तोत्रमहामन्त्रस्य,
अक्षोभ्य ऋषिः, बृहती-उष्णिक् छन्दः,
श्री उग्रतारा श्रीमदेकजटा श्रीनीलसरस्वती देवता,
पुरुषार्थचतुष्टयसिद्ध्यर्थे विनियोगः ॥

तारा रात्रिर्महारात्रिर्कालरात्रिर्महामतिः ।
कालिका कामदा माया महामाया महास्मृतिः ॥ १८-२६॥

महादानरता यज्ञा यज्ञोत्सवविभूषिता ।
चन्द्रव्वज्रा चकोराक्षी चारुनेत्रा सुलोचना ॥ १८-२७॥

त्रिनेत्रा महती देवी कुरङ्गाक्षी मनोरमा ।
ब्राह्मी नारायणी ज्योत्स्ना चारुकेशी सुमूर्धजा ॥ १८-२८॥

वाराही वारुणी विद्या महाविद्या महेश्वरी ।
सिद्धा कुञ्चितकेशा च महायज्ञस्वरूपिणी ॥ १८-२९॥

गौरी चम्पकवर्णा च कृशाङ्गी शिवमोहिनी ।
सर्वानन्दस्वरूपा च सर्वशङ्कैकतारिणी ॥ १८-३०॥

विद्यानन्दमयी नन्दा भद्रकालीस्वरूपिणी ।
गायत्री सुचरित्रा च कौलव्रतपरायणा ॥ १८-३१॥

हिरण्यगर्भा भूगर्भा महागर्भा सुलोचनी ।
हिमवत्तनया दिव्या महामेघस्वरूपिणी ॥ १८-३२॥

जगन्माता जगद्धात्री जगतामुपकारिणी ।
ऐन्द्री सौम्या तथा घोरा वारुणी माधवी तथा ॥ १८-३३॥

आग्नेयी नैरृती चैव ऐशानी चण्डिकात्मिका ।
सुमेरुतनया नित्या सर्वेषामुपकारिणी ॥ १८-३४॥

ललज्जिह्वा सरोजाक्षी मुण्डस्रक्परिभूषिता ।
सर्वानन्दमयी सर्वा सर्वानन्दस्वरूपिणी ॥ १८-३५॥

धृतिर्मेधा तथा लक्ष्मीः श्रद्धा पन्नगगामिनी ।
रुक्मिणी जानकी दुर्गाम्बिका सत्यवती रतिः ॥ १८-३६॥ १८-

कामाख्या कामदा नन्दा नारसिंही सरस्वती ।
महादेवरता चण्डी चण्डदोर्दण्डखण्डिनी ॥ १८-३७॥

दीर्घकेशी सुकेशी च पिङ्गकेशी महाकचा ।
भवानी भवपत्नी च भवभीतिहरा सती ॥ १८-३८॥

पौरन्दरी तथा विष्णोर्जाया माहेश्वरी तथा ।
सर्वेषां जननी विद्या चार्वङ्गी दैत्यनाशिनी ॥ १८-३९॥

सर्वरूपा महेशानि कामिनी वरवर्णिनी ।
महाविद्या महामाया महामेधा महोत्सवा ॥ १८-४०॥

विरूपा विश्वरूपा च मृडानी मृडवल्लभा ।
कोटिचन्द्रप्रतीकाशा शतसूर्यप्रकाशिनी ॥ १८-४१॥

जह्नुकन्या महोग्रा च पार्वती विश्वमोहिनी ।
कामरूपा महेशानी नित्योत्साहा मनस्विनी ॥ १८-४२॥

वैकुण्ठनाथपत्नी च तथा शङ्करमोहिनी ।
काश्यपी कमला कृष्णा कृष्णरूपा च कालिनी ॥ १८-४३॥

माहेश्वरी वृषारूढा सर्वविस्मयकारिणी ।

मान्या मानवती शुद्धा कन्या हिमगिरेस्तथा ॥ १८-४४॥

अपर्णा पद्मपत्राक्षी नागयज्ञोपवीतिनी ।
महाशङ्खधरा कान्ता कमनीया नगात्मजा ॥ १८-४५॥

ब्रह्माणी वैष्णवी शम्भोर्जाया गङ्गा जलेश्वरी ।
भागीरथी मनोबुद्धिर्नित्या विद्यामयी तथा ॥ १८-४६॥

हरप्रिया गिरिसुता हरपत्नी तपस्विनी ।
महाव्याधिहरा देवी महाघोरस्वरूपिणी ॥ १८-४७॥

महापुण्यप्रभा भीमा मधुकैटभनाशिनी ।
शङ्खिनी वज्रिणी धात्री तथा पुस्तकधारिणी ॥ १८-४८॥

चामुण्डा चपला तुङ्गा शुम्बदैत्यनिकृन्तनी ।
शान्तिर्निद्रा महानिद्रा पूर्णनिद्रा च रेणुका ॥ १८-४९॥

कौमारी कुलजा कान्ती कौलव्रतपरायणा ।
वनदुर्गा सदाचारा द्रौपदी द्रुपदात्मजा ॥ १८-५०॥

यशस्विनी यशस्या च यशोधात्री यशःप्रदा ।
सृष्टिरूपा महागौरी निशुम्बप्राणनाशिनी ॥ १८-५१॥

पद्मिनी वसुधा पृथ्वी रोहिणी विन्ध्यवासिनी ।
शिवशक्तिर्महाशक्तिः शङ्खिनी शक्तिनिर्गता ॥ १८-५२॥

दैत्यप्राणहरा देवी सर्वरक्षणकारिणी ।
क्षान्तिः क्षेमङ्करी चैव बुद्धिरूपा महाधना ॥ १८-५३॥

श्रीविद्या भैरवि भव्या भवानी भवनाशिनी ।
तापिनी भाविनी सीता तीक्ष्णतेजःस्वरूपिणी ॥ १८-५४॥

दात्री दानपरा काली दुर्गा दैत्यविभूषणा ।
महापुण्यप्रदा भीमा मधुकैटभनाशिनी ॥ १८-५५॥

पद्मा पद्मावती कृष्णा तुष्टा पुष्टा तथोर्वशी ।
वज्रिणी वज्रहस्ता च तथा नारायणी शिवा ॥ १८-५६॥

खड्गिनी खड्गहस्ता च खड्गखर्परधारिणी ।
देवाङ्गना देवकन्या देवमाता पुलोमजा ॥ १८-५७॥

सुखिनी स्वर्गदात्री च सर्वसौख्यविवर्धिनी ।
शीला शीलावती सूक्ष्मा सूक्ष्माकारा वरप्रदा ॥ १८-५८॥

वरेण्या वरदा वाणी ज्ञानिनी ज्ञानदा सदा ।
उग्रकाली महाकाली भद्रकाली च दक्षिणा ॥ १८-५९॥

भृगुवंशसमुद्भूता भार्गवी भृगुवल्लभा ।
शूलिनी शूलहस्ता च कर्त्रीखर्परधारिणी ॥ १८-६०॥

महावंशसमुद्भूता मयूरवरवाहना ।
महाशङ्खरता रक्ता रक्तखर्परधारिणी ॥ १८-६१॥

रक्ताम्बरधरा रामा रमणी सुरनायिका ।
मोक्षदा शिवदा श्यामा मदविभ्रममन्थरा ॥ १८-६२॥

परमानन्ददा ज्येष्ठा योगिनी गणसेविता ।
सारा जाम्बवती चैव सत्यभामा नगात्मजा ॥ १८-६३॥

रौद्रा रौद्रबला घोरा रुद्रसारारुणात्मिका ।
रुद्ररूपा महारौद्री रौद्रदैत्यविनाशिनी ॥ १८-६४॥

कौमारी कौशिकी चण्डा कालदैत्यविनाशिनी ।
शम्भुपत्नी शम्भुरता शम्बुजाया महोदरी ॥ १८-६५॥

शिवपत्नी शिवरता शिवजाया शिवप्रिया ।
हरपत्नी हररता हरजाया हरप्रिया ॥ १८-६६॥

मदनान्तककान्ता च मदनान्तकवल्लभा ।
गिरिजा गिरिकन्या च गिरीशस्य च वल्लभा ॥ १८-६७॥

भूता भव्या भवा स्पष्टा पावनी परपालिनी ।
अदृश्या च व्यक्तरूपा इष्टानिष्टप्रवर्द्धिनी ॥ १८-६८॥

अच्युता प्रच्युतप्राणा प्रमदा वासवेश्वरी ।
अपांनिधिसमुद्भूता धारिणी च प्रतिष्ठिता ॥ १८-६९॥

उद्भवा क्षोभणा क्षेमा श्रीगर्भा परमेश्वरी ।
कमला पुष्पदेहा च कामिनी कञ्जलोचना ॥ १८-७०॥

शरण्या कमला प्रीतिर्विमलानन्दवर्धिनी ।
कपर्दिनी कराला च निर्मला देवरूपिणी ॥ १८-७१॥

उदीर्णभूषणा भव्या सुरसेना महोदरी ।
श्रीमती शिशिरा नव्या शिशिराचलकन्यका ॥ १८-७२॥

सुरमान्या सुरश्रेष्ठा ज्येष्ठा प्राणेश्वरी स्थिरा ।
तमोघ्नी ध्वान्तसंहन्त्री प्रयतात्मा पतिव्रता ॥ १८-७३॥

प्रद्योतिनी रथारूढा सर्वलोकप्रकाशिनी ।
मेधाविनी महावीर्या हंसी संसारतारिणी ॥ १८-७४॥

प्रणतप्राणिनामार्तिहारिणी दैत्यनाशिनी ।
डाकिनी शाकिनीदेवी वरखट्वाङ्गधारिणी ॥ १८-७५॥

कौमुदी कुमुदा कुन्दा कौलिका कुलजामरा ।
गर्विता गुणसम्पन्ना नगजा खगवाहिनी ॥ १८-७६॥

चन्द्रानना महोग्रा च चारुमूर्धजशोभना ।
मनोज्ञा माधवी मान्या माननीया सतां सुहृत् ॥ १८-७७॥

ज्येष्ठा श्रेष्ठा मघा पुष्या धनिष्ठा पूर्वफाल्गुनी ।
रक्तबीजनिहन्त्री च रक्तबीजविनाशिनी ॥ १८-७८॥

चण्डमुण्डनिहन्त्री च चण्डमुण्डविनाशिनी ।
कर्त्री हर्त्री सुकर्त्री च विमलामलवाहिनी ॥ १८-७९॥

विमला भास्करी वीणा महिषासुरघातिनी ।
कालिन्दी यमुना वृद्धा सुरभिः बालिका सती ॥ १८-८०॥

कौशल्या कौमुदी मैत्रीरूपिणी चाप्यरुन्धती ।
पुरारिगृहिणी पूर्णा पूर्णानन्दस्वरूपिणी ॥ १८-८१॥

पुण्डरीकाक्षपत्नी च पुण्डरीकाक्षवल्लभा ।

सम्पूर्णचन्द्रवदना बालचन्द्रसमप्रभा ॥ १८-८२॥

रेवती रमणी चित्रा चित्राम्बरविभूषणां ।
सीता वीणावती चैव यशोदा विजया प्रिया ॥ १८-८३॥

नवपुष्पसमुद्भूता नवपुष्पोत्सवोत्सवा ।
नवपुष्पस्रजामाला माल्यभूषणभूषिता ॥ १८-८४॥

नवपुष्पसमप्राणा नवपुष्पोत्सवप्रिया ।
प्रेतमण्डलमध्यस्ता सर्वाङ्गसुन्दरी शिवा ॥ १८-८५॥

नवपुष्पात्मिका षष्ठी पुष्पस्तवकमण्डला ।
नवपुष्पगुणोपेता श्मशानभैरवप्रिया ॥ १८-८६॥

कुलशास्त्रप्रदीपा च कुलमार्गप्रवर्द्धिनी ।
श्मशानभैरवी काली भैरवी भैरवप्रिया ॥ १८-८७॥

आनन्दभैरवी ध्येया भैरवी कुरुभैरवी ।
महाभैरवसम्प्रीता भैरवीकुलमोहिनी ॥ १८-८८॥

श्रीविद्याभैरवी नीतिभैरवी गुणभैरवी ।
सम्मोहभैरवी पुष्टिभैरवी तुष्टिभैरवी ॥ १८-८९॥

संहारभैरवी सृष्टिभैरवी स्थितिभैरवी ।
आनन्दभैरवी वीरा सुन्दरी स्थितिसुन्दरी ॥ १८-९०॥

गुणानन्दस्वरूपा च सुन्दरी कालरूपिणी ।
श्रीमायासुन्दरी सौम्यसुन्दरी लोकसुन्दरी ॥ १८-९१॥

श्रीविद्यामोहिनी बुद्धिर्महाबुद्धिस्वरूपिणी ।
मल्लिका हाररसिका हारालम्बनसुन्दरी ॥ १८-९२॥

नीलपङ्कजवर्णा च नागकेसरभूषिता ।
जपाकुसुमसङ्काशा जपाकुसुमशोभिता ॥ १८-९३॥

प्रिया प्रियङ्करी विष्णोर्दानवेन्द्रविनाशिनी ।
ज्ञानेश्वरी ज्ञानदात्री ज्ञानानन्दप्रदायिनी ॥ १८-९४॥

गुणगौरवसम्पन्ना गुणशीलसमन्विता ।
रूपयौवनसम्पन्ना रूपयौवनशोभिता ॥ १८-९५॥

गुणाश्रया गुणरता गुणगौरवसुन्दरी ।
मदिरामोदमत्ता च ताटङ्कद्वयशोभिता ॥ १८-९६॥

वृक्षमूलस्थिता देवी वृक्षशाखोपरिस्थिता ।
तालमध्याग्रनिलया वृक्षमध्यनिवासिनी ॥ १८-९७॥

स्वयम्भूपुष्पसंकाशा स्वयम्भूपुष्पधारिणी ।
स्वयम्भूकुसुमप्रीता स्वयम्भूपुष्पशोभिनी ॥ १८-९८॥

स्वयम्भूपुष्परसिका नग्ना ध्यानवती सुधा ।
शुक्रप्रिया शुक्ररता शुक्रमज्जनतत्परा ॥ १८-९९॥

पूर्णपर्णा सुपर्णा च निष्पर्णा पापनाशिनी ।
मदिरामोदसम्पन्ना मदिरामोदधारिणी ॥ १८-१००॥

सर्वाश्रया सर्वगुणा नन्दनन्दनधारिणी ।
नारीपुष्पसमुद्भूता नारीपुष्पोत्सवोत्सवा ॥ १८-१०१॥

नारीपुष्पसमप्राणा नारीपुष्परता मृगी ।
सर्वकालोद्भवप्रीता सर्वकालोद्भवोत्सवा ॥ १८-१०२॥

चतुर्भुजा दशभुजा अष्टादशभुजा तथा ।
द्विभुजा षड्भुजा प्रीता रक्तपङ्कजशोभिता ॥ १८-१०३॥

कौबेरी कौरवी कौर्या कुरुकुल्ला कपालिनी ।
सुदीर्घकदलीजङ्घा रम्भोरू रामवल्लभा ॥ १८-१०४॥

निशाचरी निशामूर्तिर्निशाचन्द्रसमप्रभा ।
चान्द्री चान्द्रकला चन्द्रा चारुचन्द्रनिभानना ॥ १८-१०५॥

स्रोतस्वती स्रुतिमती सर्वदुर्गतिनाशिनी ।
सर्वाधारा सर्वमयी सर्वानन्दस्वरूपिणी ॥ १८-१०६॥

सर्वचक्रेश्वरी सर्वा सर्वमन्त्रमयी शुभा ।
सहस्रनयनप्राणा सहस्रनयनप्रिया ॥ १८-१०७॥

सहस्रशीर्षा सुषमा सदम्भा सर्वभक्षिका ।
यष्टिका यष्टिचक्रस्था षद्वर्गफलदायिनी ॥ १८-१०८॥

षड्विंशपद्ममध्यस्था षड्विंशकुलमध्यगा ।
हूँकारवर्णनिलया हूँकाराक्षरभूषणा ॥ १८-१०९॥

हकारवर्णनिलया हकाराक्षरभूषणा ।
हारिणी हारवलिता हारहीरकभूषणा ॥ १८-११०॥

ह्रींकारबीजसहिता ह्रींकारैरुपशोभिता ।
कन्दर्पस्य कला कुन्दा कौलिनी कुलदर्पिता ॥ १८-१११॥

केतकीकुसुमप्राणा केतकीकृतभूषणा ।
केतकीकुसुमासक्ता केतकीपरिभूषिता ॥ १८-११२॥

कर्पूरपूर्णवदना महामाया महेश्वरी ।
कला केलिः क्रिया कीर्णा कदम्बकुसुमोत्सुका ॥ १८-११३॥

कादम्बिनी करिशुण्डा कुञ्जरेश्वरगामिनी ।
खर्वा सुखञ्जनयना खञ्जनद्वन्द्वभूषणा ॥ १८-११४॥

खद्योत इव दुर्लक्षा खद्योत इव चञ्चला ।
महामाया ज्गद्धात्री गीतवाद्यप्रिया रतिः ॥ १८-११५॥

गणेश्वरी गणेज्या च गुणपूज्या गुणप्रदा ।
गुणाढ्या गुणसम्पन्ना गुणदात्री गुणात्मिका ॥ १८-११६॥

गुर्वी गुरुतरा गौरी गाणपत्यफलप्रदा ।
महाविद्या महामेधा तुलिनी गणमोहिनी ॥ १८-११७॥

भव्या भवप्रिया भाव्या भावनीया भवात्मिका ।
घर्घरा घोरवदना घोरदैत्यविनाशिनी ॥ १८-११८॥

घोरा घोरवती घोषा घोरपुत्री घनाचला ।
चर्चरी चारुनयना चारुवक्त्रा चतुर्गुणा ॥ १८-११९॥

चतुर्वेदमयी चण्डी चन्द्रास्या चतुरानना ।

चलच्चकोरनयना चलत्खञ्जनलोचना ॥ १८-१२०॥

चलदम्भोजनिलया चलदम्भोजलोचना ।
छत्री छत्रप्रिया छत्रा छत्रचामरशोभिता ॥ १८-१२१॥

छिन्नछदा छिन्नशिराश्छिन्ननासा छलात्मिका ।
छलाढ्या छलसंत्रस्ता छलरूपा छलस्थिरा ॥ १८-१२२॥

छकारवर्णनिलया छकाराढ्या छलप्रिया ।
छद्मिनी छद्मनिरता छद्मच्छद्मनिवासिनी ॥ १८-१२३॥

जगन्नाथप्रिया जीवा जगन्मुक्तिकरी मता ।
जीर्णा जीमूतवनिता जीमूतैरुपशोभिता ॥ १८-१२४॥

जामातृवरदा जम्भा जमलार्जुनभञ्जिनी ।
झर्झरी झाकृतिर्झल्ली झरी झर्झरिका तथा ॥ १८-१२५॥

टङ्कारकारिणी टीका सर्वटङ्कारकारिणी ।
ठंकराङ्गी डमरुका डाकारा डमरुप्रिया ॥ १८-१२६॥

ढक्कारावरता नित्या तुलसी मणिभूषिता ।
तुला च तोलिका तीर्णा तारा तारणिका तथा ॥ १८-१२७॥

तन्त्रविज्ञा तन्त्ररता तन्त्रविद्या च तन्त्रदा ।
तान्त्रिकी तन्त्रयोग्या च तन्त्रसारा च तन्त्रिका ॥ १८-१२८॥

तन्त्रधारी तन्त्रकरी सर्वतन्त्रस्वरूपिणी ।
तुहिनांशुसमानास्या तुहिनांशुसमप्रभा ॥ १८-१२९॥

तुषाराकरतुल्याङ्गी तुषाराधारसुन्दरी ।
तन्त्रसारा तन्त्रकरो तन्त्रसारस्वरूपिणी ॥ १८-१३०॥

तुषारधामतुल्यास्या तुषारांशुसमप्रभा ।
तुषाराद्रिसुता तार्क्ष्या ताराङ्गी तालसुन्दरी ॥ १८-१३१॥

तारस्वरेण सहिता तारस्वरविभूषिता ।
थकारकूटनिलया थकाराक्षरमालिनी ॥ १८-१३२॥

दयावती दीनरता दुःखदारिद्र्यनाशिनी ।
दौर्भाग्यदुःखदलिनी दौर्भाग्यपदनाशिनी ॥ १८-१३३॥

दुहिता दीनबन्धुश्च दानवेन्द्रविनाशिनी ।
दानपात्री दानरता दानसम्मानतोषिता ॥ १८-१३४॥

दान्त्यादिसेविता दान्ता दया दामोदरप्रिया ।
दधीचिवरदा तुष्टा दानवेन्द्रविमर्दिनी ॥ १८-१३५॥

दीर्घनेत्रा दीर्घकचा दीर्घनासा च दीर्घिका ।
दारिद्र्यदुःखसंनाशा दारिद्र्यदुःखनाशिनी ॥ १८-१३६॥

दाम्भिका दन्तुरा दम्भा दम्भासुरवरप्रदा ।
धनधान्यप्रदा धन्या धनेश्वरधनप्रदा ॥ १८-१३७॥

धर्मपत्नी धर्मरता धर्माधर्मविविवर्द्धिनी ।
धर्मिणी धर्मिका धर्म्या धर्माधर्मविवर्द्धिनी ॥ १८-१३८॥

धनेश्वरी धर्मरता धर्मानन्दप्रवर्द्धिनी ।
धनाध्यक्षा धनप्रीता धनाढ्या धनतोषिता ॥ १८-१३९॥

धीरा धैर्यवती धिष्ण्या धवलाम्भोजसंनिभा ।
धरिणी धारिणी धात्री धूरणी धरणी धरा ॥ १८-१४०॥

धार्मिका धर्मसहिता धर्मनिन्दकवर्जिता ।
नवीना नगजा निम्ना निम्ननाभिर्नगेश्वरी ॥ १८-१४१॥

नूतनाम्भोजनयना नवीनाम्भोजसुन्दरी ।
नागरी नगरज्येष्ठा नगराजसुता नगा ॥ १८-१४२॥

नागराजकृततोषा नागराजविभूषिता ।
नागेश्वरी नागरूढा नागराजकुलेश्वरी ॥ १८-१४३॥

नवीनेन्दुकला नान्दी नन्दिकेश्वरवल्लभा ।
नीरजा नीरजाक्षी च नीरजद्वन्द्वलोचना ॥ १८-१४४॥

नीरा नीरभवा वाणी नीरनिर्मलदेहिनी ।
नागयज्ञोपवीताढ्या नागयज्ञोपवीतिका ॥ १८-१४५॥

नागकेसरसंतुष्टा नागकेसरमालिनी ।
नवीनकेतकीकुन्द ? मल्लिकाम्भोजभूषिता ॥ १८-१४६॥

नायिका नायकप्रीता नायकप्रेमभूषिता ।
नायकप्रेमसहिता नायकप्रेमभाविता ॥ १८-१४७॥

नायकानन्दनिलया नायकानन्दकारिणी ।
नर्मकर्मरता नित्यं नर्मकर्मफलप्रदा ॥ १८-१४८॥

नर्मकर्मप्रिया नर्मा नर्मकर्मकृतालया ।
नर्मप्रीता नर्मरता नर्मध्यानपरायणा ॥ १८-१४९॥

पौष्णप्रिया च पौष्पेज्या पुष्पदामविभूषिता ।
पुण्यदा पूर्णिमा पूर्णा कोटिपुण्यफलप्रदा ॥ १८-१५०॥

पुराणागमगोप्या च पुराणागमगोपिता ।
पुराणगोचरा पूर्णा पूर्वा प्रौढा विलासिनी ॥ १८-१५१॥

प्रह्लादहृदयाह्लादगेहिनी पुण्यचारिणी ।
फाल्गुनी फाल्गुनप्रीता फाल्गुनप्रेधारिणी ॥ १८-१५२॥

फाल्गुनप्रेमदा चैव फणिराजविभूषिता ।
फणिकाञ्ची फणिप्रीता फणिहारविभूषिता ॥ १८-१५३॥

फणीशकृतसर्वाङ्गभूषणा फणिहारिणी ।
फणिप्रीता फणिरता फणिकङ्कणधारिणी ॥ १८-१५४॥

फलदा त्रिफला शक्ता फलाभरणभूषिता ।
फकारकूटसर्वाङ्गी फाल्गुनानन्दवर्द्धिनी ॥ १८-१५५॥

वासुदेवरता विज्ञा विज्ञविज्ञानकारिणी ।
वीणावती बलाकीर्णा बालपीयूषरोचिका ॥ १८-१५६॥

बालावसुमती विद्या विद्याहारविभूषिता ।
विद्यावती वैद्यपदप्रीता वैवस्वती बलिः ॥ १८-१५७॥

बलिविध्वंसिनी चैव वराङ्गस्था वरानना ।

विष्णोर्वक्षःस्थलस्था च वाग्वती विन्ध्यवासिनी ॥ १८-१५८॥

भीतिदा भयदा भानोरंशुजालसमप्रभा ।
भार्गवेज्या भृगोः पूज्या भरद्वारनमस्कृता ॥ १८-१५९॥

भीतिदा भयसंहन्त्री भीमाकारा च सुन्दरी ।
मायावती मानरता मानसम्मानतत्परा ॥ १८-१६०॥

माधवानन्ददा माध्वी मदिरामुदितेक्षणा ।
महोत्सवगुणोपेता महती च महद्गुणा ॥ १८-१६१॥

मदिरामोदनिरता मदिरामज्जने रता ।
यशोधरी यशोविद्या यशोदानन्दवर्द्धिनी ॥ १८-१६२॥

यशःकर्पूरधवला यशोदामविभूषिता ।
यमराजप्रिया योगमार्गानन्दप्रवर्द्धिनी ॥ १८-१६३॥

यमस्वसा च यमुना योगमार्गप्रवर्द्धिनी ।
यादवानन्दकर्त्री च यादवानन्दवर्द्धिनी ॥ १८-१६४॥

यज्ञप्रीता यज्ञमयी यज्ञकर्मविभूषिता ।
रामप्रीता रामरता रामतोषणतत्परा ॥ १८-१६५॥

राज्ञी राजकुलेज्या च राजराजेश्वरी रमा ।
रमणी रामणी रम्या रामानन्दप्रदायिनी ॥ १८-१६६॥

रजनीकरपूर्णास्या रक्तोत्पलविलोचना ।
लाङ्गलिप्रेमसंतुष्टा लाङ्गलिप्रणयप्रिया ॥ १८-१६७॥

लाक्षारुणा च ललना लीला लीलावती लया ।
लङ्केश्वरगुणप्रीता लङ्केशवरदायिनी ॥ १८-१६८॥

लवङ्गीकुसुमप्रीता लवङ्गकुसुमस्रजा ।
धाता विवस्वद्गृहिणी विवस्वत्प्रेमधारिणी ॥ १८-१६९॥

शवोपरिसमासीना शववक्षःस्थलस्थिता ।
शरणागतरक्षित्री शरण्या श्रीः शरद्गुणा ॥ १८-१७०॥

षट्कोणचक्रमध्यस्था सम्पदार्थनिषेविता ।
हूंकाराकारिणी देवी हूंकाररूपशोभिता ॥ १८-१७१॥

क्षेमङ्करी तथा क्षेमा क्षेमधामविवर्द्धिनी ।
क्षेमाम्नाया तथाज्ञा च इडा इश्वरवल्लभा ॥ १८-१७२॥

उग्रदक्षा तथा चोग्रा अकारादिस्वरोद्भवा ।
ॠकारवर्णकूटस्था ॠकारस्वरभूषिता ॥ १८-१७३॥

एकारा च तथा चैका एकाराक्षरवासिता ।
ऐष्टा चैषा तथा चौषा औकाराक्षरधारिणी ॥ १८-१७४॥

अं अःकारस्वरूपा च सर्वागमसुगोपिता ।
इत्येतत् कथितं देवि तारानामसहस्रकम् ॥ १८-१७५॥

य इदं पठति स्तोत्रं प्रत्यहं भक्तिभावतः ।
दिवा वा यदि वा रात्रौ सन्ध्ययोरुभयोरपि ॥ १८-१७६॥

स्तवराजस्य पाठेन राजा भवति किङ्करः ।
सर्वागमेषु पूज्यः स्यात् सर्वतन्त्रे स्वयं हरः ॥ १८-१७७॥

शिवस्थाने श्मशाने च शून्यागारे चतुष्पथे ।
य पठेच्छृणुयाद् वापि स योगी नात्र संशयः ॥ १८-१७८॥

यानि नामानि सन्त्यस्मिन् प्रसङ्गाद् मुरवैरिणः ।
ग्राह्याणि तानि कल्याणि नान्यान्यपि कदाचन ॥ १८-१७९॥

हरेर्नाम न गृह्णीयाद् न स्पृशेत् तुलसीदलम् ।
नान्यचिन्ता प्रकर्तव्या नान्यनिन्दा कदाचन ॥ १८-१८०॥

सिन्दूरकरवीराद्यैः पुष्पैर्लोहितकैस्तथा ।
योऽर्चयेद् भक्तिभावेन तस्यासाध्यं न किञ्चन ॥ १८-१८१॥

वातस्तम्भं जलस्तम्भं गतिस्तम्भं विवस्वतः ।
वह्नेः स्तम्भं करोत्येव स्तवस्यास्य प्रकीर्तनात् ॥ १८-
१८२॥

श्रियमाकर्षयेत् तूर्णमानृण्यं जायते हठात् ।

यथा तृणं दहेद् वह्निस्तथारीन् मर्दयेत् क्षणात् ॥ १८-१८३॥

मोहयेद् राजपत्नीश्च देवानपि वशं नयेत् ।
यः पठेत् शृणुयाद् वापि एकचित्तेन सर्वदा ॥ १८-१८४॥

दीर्घायुश्च सुखी वाग्मी वाणी तस्य वशङ्करी ।
सर्वतीर्थाभिषेकेण गयाश्राद्धेन यत् फलम् ॥ १८-१८५॥

तत्फलं लभते सत्यं यः पठेदेकचित्ततः ।
येषामाराधने श्रद्धा ये तु साधितुमुद्यताः ॥ १८-१८६॥

तेषां कृतित्वं सर्वं स्याद् गतिर्देवि परा च सा ।
ऋतुयुक्तलतागारे स्थित्वा दण्डेन ताडयेत् ॥ १८-१८७॥

जप्त्वा स्तुत्वा च भक्त्या च गच्छेद् वै तारिणीपदम् ।
अष्टम्यां च चतुर्दश्यां नवम्यां शनिवासरे ॥ १८-१८८॥

संक्रान्त्यां मण्डले रात्रौ अमावास्यां च योऽर्चयेत् ।
वर्षं व्याप्य च देवेशि तस्याधीनाश्च सिद्धयः ॥ १८-१८९॥

सुतहीना च या नारी दौर्भाग्यामयपीडिता ।
वन्ध्या वा काकवन्ध्या वा मृतगर्भा च याङ्गना ॥ १८-१९०॥

धनधान्यविहीना च रोगशोकाकुला च या ।
सापि चैतद् महादेवि भूर्जपत्रे लिखेत्ततः ॥ १८-१९१॥

सव्ये भुजे च बध्नीयात् सर्वसौख्यवती भवेत् ।
एवं पुमानपि प्रायो दुःखेन परिपीडितः ॥ १८-१९२॥

सभायां व्यसने घोरे विवादे शत्रुसंकटे ।
चतुरङ्गे च तथा युद्धे सर्वत्रारिप्रपीडिते ॥ १८-१९३॥

स्मरणादेव कल्याणि संक्षयं यान्ति दूरतः ।
पूजनीयं प्रयत्नेन शून्यागारे शिवालये ॥ १८-१९४॥

बिल्वमूले श्मशाने च तटे वा कुलमण्डले ।
शर्करासवसंयुक्तैर्भक्तैर्दुग्धैः सपायसैः ॥ १८-१९५॥

अपूपापिष्टसंयुक्तैर्नैवेद्यैश्च यथोचितैः ।
निवेदितं च यद्द्रव्यं भोक्तव्यं च विधानतः ॥ १८-१९६॥

तन्न चेद् भुज्यते मोहाद् भोक्तुं नेच्छन्ति देवताः ।
अनेनैव विधानेन योऽर्चयेत् परमेश्वरीम् ॥ १८-१९७॥

स भूमिवलये देवि साक्षादीशो न संशयः ।
महाशङ्खेन देवेशि सर्वं कार्यं जपादिकम् ॥ १८-१९८॥

कुलसर्वस्वकस्यैवं प्रभावो वर्णितो मया ।
न शक्यते समाख्यातुं वर्षकोटिशतैरपि ॥ १८-१९९॥

किञ्चिद् मया च चापल्यात् कथितं परमेश्वरि ।
जन्मान्तरसहस्रेण वर्णितुं नैव शक्यते ॥ १८-२००॥

कुलीनाय प्रदातव्यं ताराभक्तिपराय च ।
अन्यभक्ताय नो देयं वैष्णवाय विशेषतः ॥ १८-२०१॥

कुलीनाय महेच्छाय भक्तिश्रद्धापराय च ।
महात्मने सदा देयं परीक्षितगुणाय च ॥ १८-२०२॥

नाभक्ताय प्रदातव्यं पथ्यन्तरपराय च ।
न देयं देवदेवेशि गोप्यं सर्वागमेषु च ॥ १८-२०३॥

पूजाजपविहीनाय स्त्रीसुरानिन्दकाय च ।
न स्तवं दर्शयेत् क्वापि सन्दर्श्य शिवहा भवेत् ॥ १८-२०४॥

पठनीयं सदा देवि सर्वावस्थासु सर्वदा ।
यः स्तोत्रं कुलनायिके प्रतिदिनं भक्त्या पठेद् मानवः
स स्याद्वित्तचयैर्धनेश्वरसमो विद्यामदैर्वाक्पतिः ।
सौन्दर्येण च मूर्तिमान् मनसिजः कीर्त्या च नारायणः
शक्त्या शङ्कर एव सौख्यविभवैर्भूमेः पतिर्नान्यथा ॥ १८-२०५॥

इति ते कथितं गुह्यं तारानामसहस्रकम् ।
अस्मात् परतरं स्तोत्रं नास्ति तन्त्रेषु निश्चयः ॥ १८-२०६॥

इति श्रीबृहन्नीलतन्त्रे भैरवभैरवीसंवादे तारासहस्रनामनिरूपणं
अष्टादशः पटलः ॥ १८॥